श्रीः

## ॥ श्रीमद्वेदान्तदेशिकाष्टोत्तरशतनामस्तोत्रम् ॥

सुदर्शनकृपालब्ध वेदतत्त्वार्थसागरम् ।
अनुष्ठित क्रतुशतं वन्देऽस्मत्पितरं गुरुम् ॥ १

कुमारतातयाचार्यं सदाचारपरं सदा ।
वेदान्ताचार्यसिद्धान्तविजयध्वजमाश्रये ॥ २

सांख्यसौगतचार्वाकशाङ्करादि तमोनुदम् ।
त्रय्यन्तदेशिकं वन्दे वेङ्कटेशाह्वयं महः ॥ ३

श्रीमद्वेङ्कटनाथस्य नाम्नामष्टोत्तरं शतम् ।
संगृह्य तत्प्रसादाय वक्ष्ये सर्वार्थसिद्धिदम् ॥ ४

घण्टावतारोऽनन्तार्यतनयो वेङ्कटाधिपः ।
श्रीमल्लक्ष्मणयोग्यंशो वरदाचार्यवीक्षितः ॥ ५

रामानुजार्यसन्दृष्टसौपर्णमनुचिन्तकः ।
तार्क्ष्यदत्तवरश्शुद्धः प्रसादितहयाननः ॥ ६

अधीतसाङ्गसकलश्रुतिस्मृतिविदग्रणीः ।
इतिहासपुराणज्ञस्सूत्रवित्तर्कतत्त्ववित् ॥ ७

भाष्यकारो भयहरस्सुधाशीदुग्धराशिकृत् ।
प्रधानप्रतितन्त्रज्ञो देवतापारमार्थ्यवित् ॥ ८

श्रुतविद्यश्श्रावयिता श्रुतपालश्श्रुतप्रदः ।
श्रितः पाण्डित्यदाता च कृतकृत्यः कृती सुधीः ॥ ९

निरस्तसांख्यः प्रद्युक्तयोगः काणादभञ्जनः
अचिद्वैतन्यवादघ्नः क्षणिकाणुमतार्दनः ॥ १०

साकारधी निराकर्ता शून्यवादतमोनुद ।
कुदृष्ट्युरगपक्षीशः सप्तभङ्गीविलोपनः ॥ ११

भेदाभेदमतच्छेत्ता भूतपादवकल्पनः ।
अनीशवादिदम्भोलिः पाषण्डमतखण्डनः ॥ १२

सम्रक्षितागमश्शङ्खचक्रधारणरक्षिता ।
ऊर्ध्वपुण्ड्राङ्कनत्राता शुद्धसत्वमयाकृतिः ॥ १३

पञ्चाचारप्रतिष्ठाता सर्वतन्त्रस्वतन्त्रधीः ।
अवताररहस्यज्ञस्त्वर्चासौन्दर्यसक्तधीः ॥ १४

अर्थपञ्चकतत्वज्ञस्तत्वत्रयविशेषवित् ।
भक्तियोगविरोधिघ्नो भक्तिमान्भगवत्प्रियः ॥ १५

ज्ञातैकसारो द्वयविद्विभक्ताधिकृतित्रयः ।
चतुश्श्लोक्यर्थसारज्ञस्सम्यग्ज्ञाताङ्गपञ्चकः ॥ १६

षडङ्गयोगनिर्णेता सप्ततन्तुकृदुत्तमः ।
अष्टाक्षरैकनिरतो नवमैकरसाश्रयः ॥ १७

दशतात्पर्यविज्ञाता शतकृज्ज्ञ सहस्रवित् ।
स्थूललक्षोऽनेकनानाकोटिज्ञाननिवर्तकः ॥ १८

धर्मशङ्कुस्साधुवृन्दवन्दिताङ्घ्रिप्रसरोरुहः ।
पद्माक्षानन्दजनकस्तथाऽनन्तगुणाकरः ॥ १९

त्यागशब्दार्थविद्धर्मवेदी विधिविशेषवित् ।
उत्तमश्लोकभावज्ञः पञ्चकालपरायणः ॥ २०

सुरसेव्यः पूर्णमनास्सूरीन्द्रप्रतिरूपकः ।
कवितार्किकपञ्चास्यो निगमाह्वयदेशिकः ॥ २१

वैद्यो मुनीन्द्रस्सर्वज्ञः उपकर्ता तथैव च ।
सत्संप्रदायस्थिरधीरनघस्सत्यागपि ॥ २२

साधुवृत्तिर्मुक्तदम्भो जिताक्षो दीर्घबन्धुमान् ।
दयालुश्शासिता सर्वहिताचरणतत्परः ॥ २३

महागुरुस्स्वर्णवर्णस्सुबाहुः पुण्डरीकदृक् ।
पवित्रपाणिर्व्याख्यानमुद्राङ्कितकराम्बुजः ॥ २४

सव्यपाणितलन्यस्तदिव्यपुस्तकभूषणः ।
परशीर्षन्यस्तवामपादाब्जकटकोज्वलः ॥ २५

इतीदं देशिकेन्द्रस्य नाम्नामष्टोत्तरं शतम् ।
संकीर्तयेदनुदिनं सर्वपापापनुत्तये ॥ २६

एतन्नामशतं भक्त्या श्रुत्वा गुरुमुखाम्बुजात् ।
प्रसादाद्देशिकेन्द्रस्य भुक्तिमुक्ती समश्नुते ॥ २७

एकैकमपि तन्नाम कीर्तयन्सकृदुत्तम् ।
सर्वान्कामानवाप्नोति किमुताऽष्टोत्तरं शतम् ॥ २८

श्रीः

## श्रीमद्वेदान्तदेशिकप्रदर्शिता मूलमन्त्रप्रतिपादिता अष्टोत्तरशतनामावळिः

ओं रक्षकाय नमः
ओं स्वभावसिद्ध रक्षकाय नमः
ओं सर्वविषय रक्षकाय नमः
ओं रक्ष्यवस्तुविशेषानुरूप नानाप्रकार रक्षाय नमः
ओं सर्वदा रक्षकाय नमः
ओं सर्वत्र रक्षकाय नमः
ओं सर्वप्रकार रक्षकाय नमः
ओं स्वार्थ रक्षकाय नमः
ओं सर्व रक्षकत्वापेक्षित सर्वज्ञाय नमः
ओं सर्वशक्तये नमः १०
ओं स्वेच्छाव्यतिरिक्तानिवार्याय नमः
ओं अनतिक्रमणीय संकल्पसम्भवाय नमः
ओं परमकारुणिकाय नमः
ओं अवसरप्रतीक्षाय नमः
ओं व्याजमात्र सापेक्षाय नमः
ओं आश्रित सुलभाय नमः
ओं विश्वसनीयाय नमः
ओं सापराधघटनाद्यनुगुण विशेषणवते नमः
ओं शेषिणे नमः
ओं निरुपाधिक शेषिणे नमः २०
ओं नित्य शेषिणे नमः
ओं सर्वविषय शेषिणे नमः
ओं अनन्य शेषिणे नमः
ओं गुणकृत शेषिणे नमः
ओं स्वाभाविक शेषिणे नमः
ओं सामाभ्यधिकरहिताय नमः
ओं आत्महविर्विशेषग्राहाय नमः
ओं अचिद्बद्ध मुक्तनित्य विलक्षणाय नमः
ओं परशेषित्व हेतवे नमः
ओं स्वतः कर्त्रे नमः ३०
ओं शक्ताधायकाय नमः
ओं प्रेरकाय नमः
ओं अनन्य प्रेर्याय नमः
ओं अनुमन्त्रे नमः
ओं कर्मसाक्षिणे नमः
ओं सहकारिणे नमः
ओं प्रियप्रवर्तकाय नमः
ओं निरुपाधिकनन्दकाय नमः
ओं वशीकार्याय नमः
ओं सिद्धोपायाय नमः ४०
ओं साध्योपाय हेतवे नमः
ओं श्रुतिस्मृतिरूपाज्ञाकर्त्रे नमः
ओं दण्डधराय नमः
ओं सर्वसमाय नमः
ओं आश्रितपक्षपातिने नमः
ओं अविद्यादि हेतवे नमः
ओं अविद्यानर्हाय नमः
ओं आश्रिताविद्यानिवर्तकाय नमः
ओं स्वरूपान्यथाभाव रहिताय नमः
ओं स्वभावान्यथाभाव रहिताय नमः ५०
ओं सर्व नेत्रे नमः
ओं सर्व जगद्व्यापार लीलाय नमः

ॐ सर्ववेदान्त प्रधान प्रतिपाद्याय नमः
ॐ सर्वोपादानाय नमः
ॐ सर्वनिमित्ताय नमः
ॐ सत्यसङ्कल्पाय नमः
ॐ सर्वशरीरिणे नमः
ॐ सर्वशब्दवाच्याय नमः
ॐ सर्वकर्मसमाराध्याय नमः
ॐ सर्वफलप्रदाय नमः ६०
ॐ सर्वविधबन्धवे नमः
ॐ सर्वव्यापकाय नमः
ॐ निरतिशय सूक्ष्माय नमः
ॐ सर्वाधाराय नमः
ॐ स्वनिष्ठाय नमः
ॐ सत्याय नमः
ॐ ज्ञानाय नमः
ॐ अनन्ताय नमः
ॐ आनन्दाय नमः
ॐ अमलाय नमः ७०
ॐ निरुपाधिकस्वरूपविशेषणानुबन्धानन्त गुणवते नमः
ॐ नित्यदिव्यमङ्गलविग्रहवते नमः
ॐ परव्यूहाद्यवस्थावते नमः
ॐ मत्स्याद्यवताराय नमः
ॐ अप्राकृतावताराय नमः
ॐ अर्चावस्थावताराय नमः
ॐ अकालनियमावताराय नमः
ॐ आश्रितार्थगुणपरिवाहाय नमः
ॐ सर्वावस्थाशुभाश्रयाय नमः
ॐ सर्वावस्थालक्ष्मीसहचराय नमः ८०
ॐ दिव्यभूषणायुधमहिषीदिव्यस्थानपरिजन परिच्छद द्वारपालपार्षदादिमते नमः
ॐ स्थूलशरीरविश्लेषकाय नमः
ॐ विश्रमस्थानाय नमः
ॐ अनुप्रविशेषवते नमः
ॐ ब्रह्मनाडीद्वारप्रकाशकाय नमः
ॐ ब्रह्मनाडी प्रवेशकाय नमः
ॐ ब्रह्मरन्ध्रोत्क्रान्तिहेतवे नमः
ॐ अर्चिराद्यातिवाहिकनियोक्त्रे नमः
ॐ सूर्यद्वारादिनेतृत्ववते नमः
ॐ आब्रह्मलोकप्राकृतमण्डलातिक्रमहेतवे नमः ९०
ॐ विरजातीर प्रापकाय नमः
ॐ सूक्ष्मशरीरविश्लेषकाय नमः
ॐ अप्राकृतदेहप्रदाय नमः
ॐ दिव्याप्सरस्सत्कारादि प्रयोजकाय नमः
ॐ ब्रह्मगन्धादि प्रवेशकाय नमः
ॐ नित्यमुक्तसत्कारविशेष हेतवे नमः
ॐ पर्यङ्काधिरोहणपर्यन्तादरवते नमः
ॐ परिपूर्णानुभवहेतवे नमः
ॐ प्रधानप्राप्याय नमः
ॐ सदेहविदेहमुक्तसर्वविधकैङ्कर्य प्रतिसम्बन्धिने नमः १००
ॐ अवाप्तसमस्तकामाय नमः
ॐ निरतिशयानन्दवते नमः
ॐ निरतिशयभोग्याय नमः
ॐ सर्वप्रकार भोग्याय नमः
ॐ भावानुकूल स्वभावाय नमः
ॐ आत्मनस्तुल्यभोगप्रदाय नमः
ॐ आश्रितविश्लेषासहाय नमः
ॐ अपुनरावृत्तिहेतवे नमः १०८